भेदेन व्यवह्रियते चैतन्यमात्मनीति । एवं सैव पुद्गलद्रव्यजातिः स्वरूपमजहती समासादित-तत्तद्गुणविशेषरूपादिपिण्डादिव्यपदेशे हेतुरित्यतः कथञ्चिद् भेदाभेदस्वरूपं गुणपर्यायवद् द्रव्यमुच्यते, तथा धर्माधर्माकाशजीवद्रव्याण्यपि गुणपर्यायवन्ति भावयितव्यानि प्रागभिहित-क्रमेण, द्रव्यं हि भव्यं योग्यं सहक्रमभुवां गुणपर्यायाणाम्, अत्र चागुरुलघुप्रभृतयः सहभुवो गुणाः, पर्यायाः क्रमभुवः, पुनर्गतिस्थित्यवगाहज्ञानदर्शननारकादयो गुणपर्यायाः पूर्वमेव भाविता इति ॥ ३७ ॥

एवं गुणपर्यायपरिणामि द्रव्यलक्षणमिति प्रपञ्चे निर्णीते पर आशङ्कते—धर्माधर्मादीनि द्रव्याणि पञ्च स्वपरिणामलक्षणगुणपर्यायात्मकानि व्यावर्णितविविधोपकाराणि प्रदर्शितानि, तत्र कालस्यापि पूर्वमुपकारो वर्णित एव वर्तनादिगुणपर्यायलक्षणः, स च कालो द्रव्य-मित्येवं न पूर्वं नाधुना व्याख्यातः, न चोपकारकमन्तरेणोपकारः समस्ति शक्यं वक्तुम्, वर्तनादिरुपकारः सोपकारकः स्थित्यादिवदुपकारत्वात्, तत् किमयं स्मृतिप्रमोषो युष्माकं येन विविक्तोपकाराधारः कालो द्रव्यं नोक्तः ? आहोस्विद् धर्मादिद्रव्यपञ्चकसाध्य एवायं वर्तनादिव्यापार इति विरचितप्रश्ने श्रोतरि सिद्धसाध्यतोद्विभावयिषाद्वारेण सूरिराह—

कालस्य द्रव्यत्वम् **सूत्रम्—कालश्चेत्येके ॥ ५-३८ ॥**

टी०—विशिष्टमर्यादावच्छिन्नोर्ध्वाधोऽर्धतृतीयद्वीपाभ्यन्तरवर्तिजीवादिद्रव्यैः परिण-मद्भिः स्वत एव कल्पते गम्यते प्रध्यतेऽपेक्ष्यते कारणतयाऽसाविति कालोऽपेक्षाकारणम्, बलाकाप्रसवे गर्जितध्वनिवत्, पापविरतौ वा प्रबोधवत्, चशब्दो द्रव्याकर्षणार्थः, कालश्च द्रव्यं षष्ठं भवति, इतिशब्द एवंशब्दार्थे, एवमिति युक्त्यभिधानेन प्रकारान्तरेण च न निर्यु-क्तिकं द्रव्यत्वमाचक्षते कालस्य, एके इत्यसहायार्थ एकशब्दः, एकस्य नयस्य भेदलक्षणस्य प्रतिपत्तारः तदुपयोगानन्यत्वादेकेऽनपेक्षितद्रव्यास्तिकनयदर्शनाः कालश्च द्रव्यान्तरं भवती-त्याचक्षते । एतदेव भाष्येण सोपपत्तिकं स्फुटयति—

**भा०—एके त्वाचार्या व्याचक्षते–कालोऽपि द्रव्यमिति ॥ ३८ ॥**

टी०—एके त्वाचार्या इत्यादिना । एके नयवाक्यान्तरप्रधाना विशेषेणाचक्षते–व्यक्ती-कुर्वन्ति युक्त्या, परापरप्रत्ययाभिधाने तावदत्यन्तप्रसिद्धत्वान्निर्निमित्ते नाभ्युपगन्तुं शक्ये, यच्चानयोर्निमित्तं स कालः, तद्यथा–युवस्थविरयोः, सिद्धे परत्वापरत्वे देशकृते परापरदेशयो-गात् । अथ दृष्टोऽपरदेशयुक्ते त्वपरस्मिन्नपि स्थविरे परप्रत्ययः पराभिधानं च, तथैव च परदेशसंयोगात् परस्मिन्नपि यून्यपरप्रत्ययोऽपराभिधानं च, तावेतौ व्यतिकरस्वभावावभि-

---

१ 'सहजक्रम' इति क-पाठः । २ 'दृष्टोऽर्वागपर०' इति क-पाठः ।

धानप्रत्ययौ यन्निमित्तौ तत्कारणमस्ति कालद्रव्यं, कालापेक्षे परत्वापरत्वे तन्निमित्ते च प्रत्ययाभिधाने प्रादुर्भवतः परमपरमिति, तथा युगपदयुगपदिति यन्निमित्ते प्रत्ययाभिधाने स कालः, निमित्तविशेषे हि प्रत्ययविशेषः सिद्ध्यत्यभिधानविशेषश्च, शुक्लकृष्णादिवत् । दृष्टश्चायं दिग्देशकारणकार्यकर्तृव्यतिरेकेण प्रत्ययो युगपदयुगपदिति, स चायं नानिमित्तो भवितुमर्हति, यच्च निमित्तं स कालः । इदमुक्तं भवति—तुल्यकार्येषु कर्तृषु साधारणकर्तृकेषु च कार्येषु पृथक् पृथग् व्यवस्थितेषु कृतं क्रियते कर्तव्यमित्येतस्मिन् निरूढे कर्तृकर्तव्यभेदे च सति युगपदयुगपच्च कृतं क्रियते कर्तव्यमित्येतमवधिं कृत्वाऽभिधीयते, यतः सोऽर्थोऽन्यः कालसंज्ञः, कृतादीनां यौगपद्यायौगपद्येऽन्यनिमित्तासम्भवात्, न चानिमित्तमेतदभिधानम्, तथा समानकार्यावस्थानलक्षणेषु कर्मसु कर्तरि च व्यवस्थिते यत एतद् भवति चिरं क्षिप्रमिति सोऽन्योऽर्थः कालः, न चाकस्मादयं प्रत्ययः, तस्मात् यत्सद्भावे भवत्येष प्रत्ययो यदभावे च न भवति स कालः । तुशब्दो विशेषपरिग्रहार्थः, स च विशेषो भेदप्रधानो नयः, तद्बलेन कालोऽपीति, अपिशब्दश्चशब्दार्थः, कालश्च द्रव्यान्तरमागमे निरूपितमिति कथयन्ति—"कति णं भंते ! दव्वा पण्णत्ता ? गोयमा ! छ दव्वा पण्णत्ता, तं जहा—धम्मत्थिकाए, अधम्मत्थिकाए, आगासत्थिकाए, पुग्गलत्थिकाए, जीवत्थिकाए, अद्धासमए"[1] ॥ विनिवृत्तौ वा तुशब्दः, कस्य व्यावर्तकः? धर्मास्तिकायादिपञ्चकाव्यतिरिक्तकालपरिणतिवादिनो द्रव्यनयस्येति, एवं कालोऽस्ति, स चापेक्षाकारणम्, तथा ह्यःश्वोऽद्यादीनि कालवचनानि स्वरूपविज्ञानव्यतिरिक्तमुख्यबाह्यार्थनिबन्धनानि असमासपदत्वाच्छुद्धैकपदत्वाद् रूपशब्दवत्, तथा ह्यआदीनि कालवचनानि यथार्थानि यथाभ्युपगममाप्तैस्तथाऽभिधीयमानत्वात्, प्रमाणावगम्यः प्रमेयोऽर्थ इत्येवंविधवचनवत् । एवं च सति तद्भावपरिणामलक्षणसूत्रसमुपनीतैकवाक्यभावस्योत्पादव्ययध्रौव्ययुक्तं सद्(सू० २९) गुणपर्यायवद् द्रव्यम्(सू० ३७)इत्येतल्लक्षणसूत्रद्वयस्याशेषपदार्थव्यापित्वेन कालस्यापि सत्त्वद्रव्यत्वपरिणामित्वधर्मसद्भावः सिद्धः ॥ ननु च कालो नामाविभागी परमनिरुद्धः समय एवैकः समुच्छिन्नपूर्वापरकोटिः, अत एव चास्तिकाय इति नेष्टः, प्रदेशरहितत्वात्, तस्य च प्रागभावप्रध्वंसाभावावस्थे असत्यावेव वर्त्स्यद्वृत्तशब्दाभिधेये, ततश्चोत्पादव्ययध्रौव्ययोगिता कुतः? कुतो वा गुणपर्यायवद्द्रव्यता कालस्येति ?। अत्रोच्यते—जिनवचनमनेकनयशतविभङ्गवृत्तिव्यनुस्यूतसकलवस्तुभूमिव्यापि प्रधानोपसर्जनीकृतेतरेतररूपद्रव्यपर्यायोभयनयावलम्बि न कचिदेकान्तेन प्रतिष्ठते, प्रथितमेवैतत्, यतः योऽपि ह्यसावविभागः परमनिरुद्धः समय एको निष्प्रदेशः सोऽपि द्रव्यपर्यायावबद्धवृत्तिरेवेति, द्रव्यार्थरूपेण प्रतिपर्यायमुत्पादव्ययधर्मोऽपि स्वरूपानन्यभूतक्रमाक्रमभाव्यना-

(हाशिये पर: कालद्रव्यस्य पार्थक्यम्; काले उत्पादादिमत्ता)

---

[1] कति भदन्त ! द्रव्याणि प्रज्ञप्तानि ? गौतम ! षड् द्रव्याणि प्रज्ञप्तानि, तद्यथा—धर्मास्तिकायः, जीवास्तिकायः, आकाशास्तिकायः, पुद्गलास्तिकायः, जीवास्तिकायः, अद्धासमयः ।

द्यपर्यवसानानन्तसङ्ख्यपरिणामपर्यायप्रवाहव्यापिनमेकमेवात्मानमातनोति, अतीतानागतवर्तमानावस्थास्वपि कालः काल इत्यविशेषश्रुतेः सर्वदा ध्रौव्यांशावलम्बनात् सामान्यपरमार्थ एव, अतः सन्नेव न कदाचिदप्यसन्, स एव ह्यःप्रभृतिपर्यायैरुत्पादव्ययस्वभावैः प्रतिपर्यायमाघ्रातस्वरूपत्वादाविर्भावतिरोभावावनुभवन् विनाशीति, तद्यथा—श्वोभावेन विनश्याद्यत्वेन प्रादुर्भवति, अद्यत्वेनापि विनश्य ह्यस्त्वेनोत्पद्यते, कालत्वेन तु श्वोऽद्यह्यःपर्यायेषु सम्भवित्वादन्वयरूपत्वाद् ध्रुव एव, ततो य एवोत्पद्यते स एव विनश्यति द्रव्यार्थतः स एवावतिष्ठते अनन्यत्वात् सर्वदाऽपि, तथा य एव विनश्यति स एवोत्पद्यतेऽवतिष्ठते चेत्युत्पादव्ययध्रौव्याण्येकाधिकरणानीति, न हि श्वोऽद्यादय उत्पादविनाशाः कालध्रौव्यमन्तरेण, निर्बीजत्वान्निराधारत्वात् खपुष्पवत्, नापि कालध्रौव्यं ह्यःप्रभृत्युत्पादविनाशावन्तरेण, अपरिणामित्वाद् व्योमोत्पलादिवदेव। तस्मादेवं निरूपिते वृत्तो वर्त्स्यति च द्रव्यार्थत्वेन कालः सद्भिः स्वपर्यायैरामृष्टो विवक्षित उपनीतोऽस्तीति भावितमेव॥ पर्यायार्थतया त्वत्यन्तविविक्तरूपत्वात् पर्यायाणां प्रत्युत्पन्नमात्रविषयत्वादतीतानागतयोरभावादेव न वृत्तो नापि वर्त्स्यन्निति, तेन प्रकारेणासत्त्वम्। अतः स्यात् सत्त्वं स्यान्नास्तित्वमिति व्यवस्थानात् सन् गुणपर्यायवांश्च कालः, एष च निर्वर्तकहेतोः कर्मणः कालोऽपेक्षाकारणं मनुष्यलोके प्रत्यक्षलिङ्गः, तानि च लिङ्गानि प्रतिनियमवर्तीनि वर्षोष्णशीतवाताशनिहिमतडिदभ्रगर्जितोल्काङ्कुरकिसलयपत्रफलहरितप्रसूनोदयप्रवासतारानुचक्रक्रमादीनि, तथा प्रयोगोऽपि—प्रतिनियतव्यवस्थाभाविनो वर्षादिवनस्पत्यादिपरिणामा यथास्वं परिणामिकारणव्यतिरिक्तापेक्षाकारणद्रव्यान्तरवृत्तिसापेक्षप्रादुर्भावाः, असन्ततैकरूपपरिणामत्वे सति प्रतिनियतव्यवस्थयोत्पद्यमानत्वात्, तदानीमात्मलाभत्वात्, तद्भावमापाद्यमानत्वाद्, बहिःप्रकाशापेक्षिरूपान्तरविनिश्चयाभिमुखीभूतचक्षुरिन्द्रियविज्ञानवत्, स्वसमये वा धर्माधर्मद्रव्योपकारजनितजीवपुद्गलगतिस्थितिवत्, अर्धतृतीयद्वीपव्यापित्वेऽपि समयस्य भोगभूमिषु नास्ति किञ्चित् काललिङ्गं, व्यवस्थितपरिणामत्वात्, यतः सम्भवतामर्थानां स्वयं स्वभावेन कालोऽपेक्षाहेतुरुक्तः, न निर्वर्तक इति। एवं तर्ह्यसम्भविलिङ्गोऽपि भोगभूमिषु यथाऽस्ति कालस्तथाऽर्धतृतीयद्वीपक्षेत्राद् बहिरपि किमिति नाभ्युपगम्यते? अपि च—वर्तनं तत्रास्ति परत्वापरत्वादिलिङ्गं च, प्रत्यक्षदृश्यमानकाललिङ्गत्वाद् भरतादिक्षेत्रवत् स्यात् तत्र काल इति, अत्रोच्यते—सत्यामपि तत्र भावानां वृत्तावविशेषेण तस्याः काललिङ्गत्वाभाव इत्यसिद्धता हेतोः। नहि सर्वा वृत्तिः कालापेक्षा। यत्र तु कालस्तत्रासौ वर्तनाद्याकारेण परिणमत इति नियमः। कदाचिद् वा शङ्केत परः—बाह्यद्वीपेषु वृत्तिर्भावानां कालापेक्षा वृत्तिशब्दवाच्यत्वात् प्रयोगनिरपेक्षेहत्यचूतकुसुमवृत्तिवदिति, एतदप्ययुक्तम्, अलोको हि सम्प्रति विद्यमानत्वाद् वर्तते, न च तत्र कालोऽस्तीत्यनैकान्तिकत्वात्, समयवृत्त्या वाऽनेकान्तः,

भाववृत्तौ कालस्यापेक्षिता

१ 'नन्तरसंख्य' इति क-पाठः। २ 'वर्त्स्यति नैतेन' इति क-पाठः। ३ 'परव्यक्त इति प्रत्यन्तरे' इति ग-टी-पाठः। ४ 'शब्दावाच्यत्वाद्' इति क-पाठः। ५ 'वाऽनैकान्तः' इति क-ख-पाठः।

तस्मान्मानुषलोक एव कालः, स च परिणामी, न पुनरेक एव विच्छिन्नमुक्तावलीमणिवदवि-
द्यमानपूर्वापरकोटिर्वर्तमानः समयोऽभ्युपेयते, निरन्वयसमयोत्पादविनाशप्रसक्तेः, एकनयाव-
लम्बित्वं चैवं स्यात्, अतोऽनर्पितद्रव्यनयमतानुसारिभिः सन्ततिपक्षप्रतिज्ञानाद् विद्यमानतैव
पूर्वोत्तरसमययोः, वर्तमानसमय एवोत्तरसमयरूपेणोत्पद्यते तथापरिणामात्, नापूर्वमुत्पद्यते
खपुष्पादि, नापि निरन्वयमेव किञ्चिद् विनश्यति कार्यत्वात् तत्सन्तानपतितत्वादुपान्त्यस-
न्ताननिरूपत्वात्, न पुनः सर्वथैवोद्भवविनाशौ निराधारावेव, ध्रौव्यं तयोराधारस्तस्मिन् सति
तयोर्भावादिति। यच्च परत्वापरत्वादि काललिङ्गमभ्यधायि प्राक् तदपि नयान्तराभिप्रायादेव,
अन्यथा तु स्थितिविशेषापेक्षे हि परत्वापरत्वे, षष्टिवर्षाद् वर्षशतिकः
परः, अपरः षष्टिवर्ष इति, स च स्थानविशेषः षष्टिर्वर्षाणां शतं वर्षाणा-
मिति स्थितेरेव, सा च सत्त्वापेक्षा, अस्तित्वादेव भावानाम्, अस्तित्वं
चानपेक्षमित्युक्तम्, तस्मात् कालापेक्षे परत्वापरत्वे न भवतः, यौगपद्य-
मपि कर्तृषु व्यवस्थितं तेषामेव कर्तॄणां कांश्चित् क्रियाविशेषानपेक्षते, न कालम्, न च ते
क्रियाविशेषास्ताभ्यः क्रियाभ्योऽत्यन्तमेव नाना भवितुमर्हन्ति, यदा तु काकतालीयेनैकः
कर्ता तथाविधक्रियामापद्यतेऽन्योऽपि कर्ता तथैव तत्क्रियापरिणतस्तदा युगपदिति व्यपदेशः,
एवमयुगपदित्यपि भावनीयम्॥ तथा चिरक्षिप्रयोरेष एव प्रपञ्चः, ते च गतिविशेषापेक्षे,
गतिश्च परमाण्वादिद्रव्यप्रतिबद्धेति॥ अथ कस्मादादावेकनयालम्बनेन सूत्रार्थमुपक्रम्य पुनर्न-
यद्वयेनोपसंहरति भवानित्याक्षिप्तेऽभिधीयते—विविक्तार्थसूत्रार्थदर्शनार्थत्वात्, आर्षे हि षष्ठं
कालद्रव्यमितरद् द्रव्यविविक्तं दर्शयत्येकनयप्रवृत्तेः। न च जैने प्रवचने कश्चिदेको नयः
समस्तं[3] वस्तुस्वरूपं प्रतिपादयितुं प्रत्यलः, यतस्तत्प्रतिद्वन्द्विनयानुसारि सूत्रमपरमागमेऽस्ति—
"[4]किमिदं भंते! कालोत्ति पवुच्चति? गोयमा! जीवा चेव अजीवा चेव"[5]। इदं हि सूत्रमस्ति-
कायपञ्चकाव्यतिरिक्तकालप्रतिपादनाय तीर्थकृतोपादेशि, जीवाजीवद्रव्यपर्यायः काल इति
सूत्रार्थः, कलनं कालः—प्रतिविशिष्टपर्यायोत्पादसङ्ख्यानम्, कल्यते वाऽनेन वस्त्विति कालः, स
च वर्तनादिरूपो द्रव्यस्यैव[6] पर्यायः, तत्र स्वयं सद्भावेन वर्तमानमर्थं या प्रचो-
दयति वर्तस्व वर्तस्व मा न वर्तिष्ठाः हेतुमण्णिचि "ण्यासश्रन्थो युच्" (पा०
अ०३, पा० ३, सू० १०७) इति स्त्रीलिङ्गे भावे वर्तना क्रिया, सा च वर्तितुर्भा-
वादनर्थान्तरं कालस्तत्परिणामत्वात्, द्रव्यमेव काल इति कर्मधारयवृत्तिर्द्रव्यार्थाभेदविवक्षायाम्,
नहि वर्तनादिक्रियाभ्यो भिन्नं द्रव्यमस्ति, एकस्यापि समयस्य प्रतिद्रव्यमभेदेन वृत्तत्वादान-

परापरत्वादेः स्थितिविशेषापेक्षिता

कालस्य पर्यायता

---

१ 'यतो वर्तमान' इति क-ख-पाठः। २ 'प्रसृतेः' इति क-पाठः। ३ 'समस्तवस्तु' इति क-पाठः।

४ किमिदं भदन्त! काल इति प्रोच्यते? गौतम! जीवाश्चैव अजीवाश्चैव।

५ "समयाइ वा आवलियाइ वा जीवाति या अजीवाति या पवुच्चइ" इति पाठस्तु स्थानाङ्गे (सू० ९५)।

६ 'द्रव्यस्यैव पर्यायः' इति क-ख-पाठः।

न्त्यम्, द्रव्यं च द्विविधं जीवाजीवात्मकत्वात्, तस्माज्जीवाजीवाः समयावलिकादिभेदवाच्याः, तत्परिणतिरूपत्वात्, द्रव्यास्तिकस्य हि द्रव्यं द्रव्यार्थतामात्रमेकमभिन्नं सर्वव्यापि, तथाऽत्यन्तमपास्तव्यतिरेकम्, अन्वयमात्रसङ्ग्राहिणः कालसामान्यमेकमेवोपचरितविशेषम्, अतश्चेतनाचेतनद्रव्यविषया वर्तना सादिसपर्यवसितादिभेदेन चतुर्विकल्पा सा द्रव्यस्य कालः सुरसिद्धभव्याभव्यस्कन्धानागतातीतव्योमादिनिदर्शनसाध्यः, अद्धाकालस्यापि सूर्यादिक्रियाविशिष्टत्वान्न द्रव्यव्यतिरेकित्वम्, यतो यदाकाशखण्डमुष्णांशुना स्वयमंशुभिश्च संयुक्तं तस्याऽहरिति नाम, यदन्यत् सा रात्रिरिति, तस्याहोरात्रस्य परमसूक्ष्मोऽत्यन्तविच्छेदः कश्चिदविभागी भागः समय उच्यते। एतत्प्रचयविशेषाश्चावलिकादयः। सोऽयमद्धाकालः समयादिः समयक्षेत्रप्रतिबद्धो द्रव्यकालान्न व्यतिरिच्यते, एवमेष नयः प्रथमोपन्यस्तनयप्रत्यनीकतया प्रवृत्तः सकलवस्तुसद्भावप्रतिपादनायाक्षम एवेत्युभयनयसामग्रीप्रतिपाद्यवस्तुस्वभावो निरवद्यः, सूत्रकारस्याप्येष एवाभिप्रायः सूत्रेणैकीयमतमुपन्यस्यतः, इत्येके इत्थमाचक्षतेऽन्ये त्वन्यथेति ॥ सम्यग्ज्ञानं पुनः सामग्र्यामेव सम्पद्यते, न प्रकारान्तरेणापीति, एवं प्रसिद्धेन कालद्रव्येणानेकरूपो व्यवहारः प्रतीयते वृत्तवर्तमानवर्त्स्यद्विषय इति ॥ ३८ ॥

इह (सू० ३८) द्रव्यलक्षणाधिकारेऽभिहितम्–कालश्चेत्येके इति द्रव्यत्वप्रतिपिपादयिषया, कालस्यास्य च द्रव्यत्वे सत्युपकारेण भवितव्यमित्युपकारो वर्तनादिलक्षणः प्रथममेव प्रतिपादितः, तथा धर्मादिद्रव्याणामसङ्ख्येयाः प्रदेशाः, तथा धर्माधर्मयोरित्यादिना सूत्रकलापेन प्रदेशपरिमाणमभिहितम्, अस्य तु कालद्रव्यस्य नोक्तं प्रदेशपरिमाणम्, तत्र तद्विवक्षया त्विदमुच्यते—**सोऽनन्तसमयः**। अथवा एकान्तेन कालद्रव्यमेकमपरिणामीच्छन्ति केचित्, तत्प्रतिक्षेपार्थमिदमाह—

कालस्य समयाः

## सूत्रम्—सोऽनन्तसमयः ॥५–३९॥

**टी०—स** इत्यनन्तरसूत्रप्रतिपादितो द्रव्यविशेषः कालाख्योऽ**नन्तसमयः** परिणामी प्रतिपत्तव्यः, तत्राविभागी यः कालः परमनिरुद्धश्च समयः स कालावयव इत्यर्थः, स च न भाक्तः, किं तर्हि ? पारमार्थिकः, अनन्तशब्दः सङ्ख्यावाची, अनन्ताः समयाः–पर्याया भेदा यस्यासावनन्तसमयः। उक्तं ( सू० ३७)–गुणपर्यायवद् द्रव्यलक्षणं, सर्वं च द्रव्यमनन्तपर्यायमिष्यते, ते च पर्यायाः स्वपरभेदभाजः, यथैकस्याणोः शुक्लसुरभितिक्तादयस्तदन्यद्रव्यवर्तिनश्च संस्थानवर्णादयः, तथैकस्य कालद्रव्यस्यानन्तप्रदेशस्यान्येऽपि सत्त्वज्ञेयत्वद्रव्यत्वकालत्वादयोऽर्थपर्याया वचनपर्यायाश्चानन्ता एव, वर्तनादिलक्षणस्यातीतसाम्प्रतानागतशब्दवाच्याः परिणामविशेषा इति, एनमेवार्थं भाष्येण स्पष्टयति—

**भा०—स[1] चैष कालोऽनन्तसमयः। तत्रैक एव वर्तमानसमयः, अतीतानागतयोस्त्वानन्त्यम् ॥ ३९ ॥**

---

१ ' सर्व एष ' इति क-ख-पाठः ।

**टी०—स चैष काल इत्यादि** । स इति प्रक्रान्तपरामर्शादेष इत्यनेन सूत्रेणानुसन्धीयते कालः, चशब्दो हेतौ, यस्मादनन्तसमयस्ततः परिणामीति, अनाद्यनन्तभाविन्यां समयपरम्परायां सङ्ख्यानं प्रत्यनिर्दिष्टलक्षणायां विशिष्टसङ्ख्यानिरूपणायेदमाह–**अनन्तसमय** इति । सप्रदेशः कालो द्रव्यत्वादात्माकाशादिवत्, ततश्च परिणाम्यपि प्रदेशवत्त्वात् तद्वदेवेति, तत्रेति तस्मिन् कालद्रव्ये वर्तमाने, एक एव प्रदेशः समयलक्षणः तिर्यगर्धतृतीयद्वीपसमुद्रद्वयव्यापी ऊर्ध्वमधश्चाष्टादशयोजनशतप्रमाणः कालच्छेदेनानवयवः क्षेत्रच्छेदेनादेशोऽपि कल्पितावयवो भावभेदेन वा सावयवः, शेषद्रव्योपकार्योपकारकत्वेन स्वगतेन चागुरुलघुलक्षणेन परिणामेनेति, न चायमस्माकमेकान्ताग्रहोऽनवयव एवेति, किन्तु विभज्याविभज्यार्थस्य व्याकरणादर्पितानर्पितसिद्धेः कालतो द्रव्यतश्चार्पितोऽनवयवः, तस्योत्पत्त्यनन्तरविनश्वरत्वात्, एकस्य समयस्य कालकृता देशा न सन्त्येव, यथा कालकृतदेशैरनवयव एवं द्रव्यकृतदेशैरपीति, क्षेत्रतो भावतश्च सावयव एव, उत्पद्यमानसमयपरिणामिकारणमतीतसमयकार्यं वर्तमानावस्थामनुभूय वृत्तपर्यायमनुभविष्यति, प्राप्तवर्तमानत्वाच्च वर्त्स्यर्त्यपीत्येकैकसमयस्य द्रव्यता, अतः प्रदेशावयवबहुत्वात् कार्यव्यपदेश्योऽपि, कालद्रव्यप्रदेशावयवैर्नास्ति कायता, व्यवहारस्तु रूढ्याऽस्तिकायैः पञ्चभिरेव प्रवचने, न चैतावतैवास्यास्तिकायताऽपह्नोतुं शक्या, आगमे तु कचित् प्रदेशे नित्यतया व्यवहारः, कचिदनित्यतया । न चैकान्तेन नित्यत्वमनित्यत्वं वा युक्तमित्यलं प्रसङ्गेन । प्रकृतमुच्यते–वर्तमान एकः समय इति निरूप्यैवमतीतानागतयोर्निरूपणायेदमाह—समयराश्योः कियती सङ्ख्येति ॥ **अतीतानागतयोस्त्वानन्त्यम्** ॥ अतीताः सपर्यवसाना वर्तमानावधिकाः सन्तत्याऽनाद्या इत्यतोऽनन्ताः, तथाऽनागताः साद्या वर्तमानावधिकाः पर्यवसानशून्याः सन्तत्यैव, अनन्तस्य भाव आनन्त्यं–सङ्ख्याख्यो गुणः, स च न सङ्ख्येयसङ्ख्या नासङ्ख्येयसङ्ख्येति, किं तर्हि ? अनन्तसङ्ख्यैव, तुशब्दः समुच्चये । अतीतोऽनागतश्च समयराशिरनन्त इति, सा चातीताद्धा अनागताद्धा च शेषकायेभ्योऽल्पबहुत्वचिन्तायां पृथगेवोक्ता, न पञ्चास्तिकायधर्मत्वेनेति, अभव्येभ्योऽनन्तगुणाः सिद्धाः, सिद्धेभ्योऽतीतसमयराशिरसङ्ख्येयगुणः, अस्माद् भव्यास्त्वनन्तगुणाः, भव्येभ्योऽनन्तगुणाः वर्त्स्यत्समयाः, इत्येतदल्पबहुत्वमस्तिकायपञ्च( त्व एव ) कालद्रव्यस्य घटत इति ॥ ३९ ॥

**भा०—अत्राह–उक्तं( अ० ५, सू० ३७) भवता–गुणपर्यायवद् द्रव्यमिति । तत्र के गुणा इति ? । अत्रोच्यते—**

**टी०—अत्राह–उक्तं** भवतेत्यादिना सम्बन्धमावेदयति । द्रव्याधिकारसम्बन्धेन कालद्रव्यं सपर्यायमभिधाय गुणपर्यायस्वरूपं निरूपयितुकामो भाष्यकारः परमेव प्रश्नं कारयति ।

---

१ 'मतीतः समय' इति क-पाठः । २ 'र्यभ्य' इति क-पाठः । ३ 'स चा' इति क-पाठः ।

प्रतिपादितं भवता—गुणपर्यायपरिणामि द्रव्यम्, तत्र के गुणा यैस्तद्द्रव्यं गुणवदिति दिश्यते? गुणग्रहणाच्च पर्याया गृहीता एवेत्यतो न भेदेन प्रश्नः, प्राक् च प्रतिपादितमेव गुणाः पर्याया इति चैकमित्युक्ते आचार्य आह—अत्रोच्यत इति। गुणस्वरूपमभिधीयते, यादृशा द्रव्यगुणास्तादृशाः प्रतिपाद्यन्त इति सङ्गिरते गुरुः॥

## सूत्रम्—द्रव्याश्रया निर्गुणा गुणाः॥ ५-४०॥

टी०—स्थित्यंशो द्रव्यं स आश्रयो येषां परिणामि कारणं परिणामविशेषाणां गुणानां ते द्रव्याश्रयाः, परिणामिपरिणामलक्षण आश्रयाश्रयिभावो नाधाराधेयलक्षणः, कुण्डबदरादिवत्। न च समवायलक्षणः संबन्धो युज्यते द्रव्यगुणानामनुपपत्तेः। अस्तु तावद् द्रव्यगुणानां समवायलक्षणः संबन्धः। समवायस्य गुणानां च यः सम्बन्धः स किं समवायोऽथ सम्बन्धान्तरम्?। यदि समवायः, तस्य तेषां च किमभिधानः सम्बन्ध इति। समवायश्चेत्, अनवस्था, सम्बन्धान्तरमिति चेत्, आगमविरोधः स्पष्टतरमुच्यते, समवायाख्यः सम्बन्धः समवायिनोर्यदि वर्तते, ततः संयोगवृत्त्या समवायवृत्त्या वा वर्तेत? संयोगवृत्त्या तावन्न वर्तते, कुतः? अद्रव्यत्वाद्, द्रव्यविषयो हि संयोग इष्यते, न पुनर्द्रव्यगुणविषयः। अथ समवायवृत्त्या वर्तते तत्र समवायस्ततो यद्यन्यसमवायवृत्त्या सोऽपि वर्तते ततोऽनवस्थोद्ग्राहणीया॥ एवमुक्ते वार्तिककारेणोक्तं—समवायो न क्वचिद् वर्तत इति ब्रूमः, अनाश्रित एवासौ स्वतन्त्रः सम्बन्धो भवतीत्येतदप्ययुक्तम्। यदि द्रव्यगुणयोर्नाश्रितः कयाचिद् वृत्त्या न तर्हि द्रव्यं गुणैः सम्बद्धं तेन समवायाख्येन सम्बन्धेनानाश्रितत्वाद् द्रव्यगुणयोर्घटपटादिवत्, घटपटयोर्हि परस्परेण नास्ति समवायलक्षणः सम्बन्धः, तस्माद् द्रव्यं परिणमते, गुणपर्यायाः परिणामविशेषाः, ते च गुणा निर्गुणाः। नहि शुक्लघटकपालादीनां गुणपर्यायाणामन्ये गुणपर्यायाः सन्ति, द्रव्यस्य परिणामिनः शुक्लादिपरिणामो घटकपालसंस्थानादिश्च परिणामः, न पुनस्तस्यैव शुक्लादेरन्ये शुक्लादयः कुम्भादिसंस्थानस्य वाऽन्ये संस्थानादयस्तत्परिणामा विद्यन्ते, इत्यतो निर्गुणाः। एनमेवार्थं भाष्येण स्फुटयति—

**भा०—द्रव्यमेषामाश्रय इति द्रव्याश्रयाः, नैषा गुणाः सन्तीति निर्गुणाः ४०॥**

टी०—**द्रव्यमेषामाश्रय** इत्यादि भाष्यम्। द्रव्यं भव्यं योग्यं युगपदयुगपद्भाविन्याः गुणपर्यायपरिणतेः स्थितिः सामान्यमेषामुत्पादव्ययलक्षणानां ज्ञानादिशुक्लादिघटकशकलादीनामाश्रयः, परिणाम्यर्थो द्रव्यं, तद्धि ज्ञानशुक्लादिघटकादितया परिणमते, भूयस्तेनाकारेण विनिवर्तते, द्रव्यतया व्यवतिष्ठते, तदेषामुपग्र इति द्रव्याश्रयाः। इतिशब्द एत्रशब्दार्थे। एवशब्दस्त्ववधारयति, परिणामिपरिणामलक्षण एवाश्रयाश्रयिभावो न प्रकारान्तरेण, परिणामिपरिणामयोश्च द्रव्यपर्यायनयद्वयापेक्षयैकत्वान्यत्वभजनाविधिरुद्ग्राह्य इति। तं भजनाविधिमुपन्यस्य-

---

१ 'णामोऽतस्तस्यैव' इति क-ख-पाठः।

ति—नैषां गुणाः सन्तीति निर्गुणाः । एषां ज्ञानादिशुक्लादीनां गुणानां नान्ये गुणाः केचन सन्तीति निर्गुणाः, द्रव्याद् व्यतिरेके सत्येतदुपपद्यते, गुणगुणिनोर्भेद इत्यर्थः । तत् तु नास्त्येकान्तेन। इतिशब्दोऽत्राव्यतिरेकनयवाक्योपन्यासार्थः । नैषां गुणाः सन्तीति भेदनयप्रधानं वचनम् । न च भेदपरमार्थ एव जैनः कृतान्तः, सकलस्य वस्तुनो भेदाभेदरूपत्वात् । यदा तु द्रव्यमेव तथा परिणतं ज्ञानाद्यात्मना शुक्लाद्यात्मना वा तदा द्रव्यस्य तादात्म्याद् गुणानां स्वरूपं भिन्नं नास्त्येवेति, एवं च शुद्धद्रव्यास्तिकादेशादनन्यत्वमेव नैर्गुण्यं, पर्यायविवक्षायां तु स्याद् गुणप्रधानत्वात् पर्यायनयस्येति, कदाचिदाशङ्केत परः—सतां गुणानां निर्गुणत्वं चिन्त्यतेऽत्यन्तशुद्धद्रव्यास्तिकपक्षे गुणा एव न सन्ति कुतोऽनन्यत्वमिति ? । उच्यते—न सन्तीत्येतदयुक्तम्, सन्ति गुणाः, किन्तु द्रव्यादव्यतिरिच्यमानस्वरूपाः, तद् यदि द्रव्यं शुक्लाकारेण परिणतं भवति, तदा कृष्णाकारपरिणामो नास्तीति स्फुटं निर्गुणत्वमिति ॥ ४० ॥

**भा०—अत्राह-उक्तं ( सू० ३६ ) भवता-बन्धे समाधिकौ पारिणामिकाविति । तत्र कः परिणाम इति ? । अत्रोच्यते—**

**टी०—अत्राह-उक्तं भवतेत्यादिना** सम्बन्धमाचष्टे । भवतेदमुक्तं ( सू० ३६ )–बन्धे **समाधिकौ पारिणामिकाविति**, समः समगुणस्य परिणामं विधत्ते, हीनगुणस्याधिकगुणः परिणाममापादयतीति, तथा नामादिसूत्र(१-५)भाष्य इदमभिहितम्–भावतो द्रव्याणि धर्मादीनि सगुणपर्यायाणि प्राप्तिलक्षणानि वक्ष्यन्ते, प्राप्तिश्च परिणामः, स च सकलद्रव्यविषय एव विपृच्छिषतः, तत्र सूत्रे भाष्ये वा कः परिणामशब्दवाच्योऽर्थो यमङ्गीकृत्येदमुक्तम्–समगुणोऽधिकगुणो वा परिणाममापादयतीति, एवं मन्यते किमर्थान्तरभूतं परिणामं जनयन्त्याहोस्वित् त एव स्वरूपमजहतो द्रव्यविशेषा वैशिष्ट्यं प्रतिपद्यमानास्तथा भवन्तीति सन्देहभाजा पृष्टे भाष्यकृदाह–**अत्रोच्यत** इति । किमुच्यते ? यत् पृष्टम् । किञ्च पृष्टम् ? परिणामसद्भावः पञ्चविधस्य षड्विधस्य वा द्रव्यस्य धर्मादेः ।

## सूत्रम्–तद्भावः परिणामः ॥ ५–४१ ॥

**टी०—**तस्य भावस्तद्भावः, तस्येति द्रव्यषट्कस्याभिसम्बन्धः, तदेव हि धर्मादिद्रव्यं तेन तेनाकारेण भवति, गतिस्थित्यवगाहशरीरादिज्ञानादिवृत्तसमयादिना, भूतिर्भवनमात्मलाभो भावः **परिणामः**। तस्येति कर्तृलक्षणा षष्ठी, भवतेरकर्मकत्वात् । तान्येव हि द्रव्याणि तथा भवन्ति, न कूटस्थान्यवतिष्ठन्ते, न सर्वथोत्पद्यन्ते, नापि सर्वथोच्छिद्यन्ते, तस्मात् सामान्यरूपः परिणामोऽनुवृत्तिरूपत्वात्, अनुवर्तते हि सर्वत्र गत्यादिषु धर्मादिद्रव्यं स्वरूपमजहत्, तथाविधधर्मद्रव्यादीनां समानभावः सामान्यम्, कर्तृषष्ठ्या द्रव्यादय एव समाना भवन्तीति सामान्यमेव, तद्भावलक्षणः परिणामः, इत्येतदेव भाष्येण प्रकाशयति परिणामस्वरूपम् ।

---

१ ' तद्यदा ' इति क-पाठः ।

**भा०—धर्मादीनां द्रव्याणां यथोक्तानां च गुणानां स्वभावः स्वतत्त्वं परिणामः ॥ ४१ ॥ स द्विविधः**

**टी०—धर्मादीनां** द्रव्याणामित्यादि भाष्यम्। धर्मो गत्युपग्रहकृल्लोकाकाशव्यापी, स आदिर्येषां तानि धर्मादीनि द्रव्याणि, आदिशब्दादधर्माकाशपुद्गलजीवकालाख्यानि, तेषां स्वो निजो भावो भूतिरात्मलाभोऽवस्थान्तरप्राप्तिः परिणामः। परिशब्दो व्याप्तौ, दोषेण परीतो यथा—दोषेण व्याप्तः, नमिः प्रह्वत्वमभिधत्ते प्रह्वत्वमृजुत्वमवस्थान्तरप्राप्तिलक्षणं धर्मादिस्वतत्त्वं, तेन चोत्पादो विनाशश्च व्याप्तः, समस्तस्थित्यंशसामान्येनाव्याप्तो नोत्पादो नो विनाशोऽस्तीति परिणामशब्दार्थः, समन्ताद् भावे वा परिः, परिखनतिवत्, सर्वत्रार्थाभिधानप्रत्ययेषु नमनमन्वयांशानुवेधः, वीप्सार्थो वा परिशब्दः, यथा वृक्षं परिसिञ्चति, वृक्षं वृक्षं सिञ्चतीत्यर्थः। एवं द्रव्यं द्रव्यं परिनमनं परिणामः, स्वमात्मनो व्यतिरेक्यपि दृष्टं गोमहिष्यजाविकादि तद्व्यवच्छेदार्थमाह—**स्वतत्त्वमिति**। तस्य भावस्तत्त्वं धर्मादेरवस्थान्तरापत्तिः, स्वं च तत् तत्त्वं चेति स्वतत्त्वं—धर्मस्यैव निजमवस्थान्तरम्, न त्वधर्मादेरवस्थान्तरं, धर्मद्रव्यस्य परिणामः, एवमधर्मादिद्रव्याणामपि स्वस्वावस्थापत्तिः परिणामो द्रष्टव्यः, धर्मो हि गन्तुर्गत्युपग्रहाकारेण परिणमते स्वरूपापरित्यागेन, स्थित्युपग्रहाकारेण स्थातुरधर्मः, व्योमाऽप्यवगाढुरवगाहदायित्वेनोपजायते, पुद्गलाः शरीरशब्दादिरूपेण, आत्मा ज्ञानदर्शनोपयोगवृत्त्या नारकादिभावेन च, कालोऽपि वर्तनादिप्रपञ्चेन परिणमते, तथा यथोक्तानां गुणानामिति, येन प्रकारेणोक्ताः शुक्लादिघटकपालादय एकजातीयत्वेन, न भिन्नजातीयतया, गुणाः पृथक् पर्यायाश्च पृथगिति, अत एवेह पर्यायग्रहणं न कृतम्, गुणपर्याययोरेकत्वात्, तेऽपि हि शुक्लादयः कृष्णादित्वेन परिणमन्ते वर्णादिसामान्यममुञ्चन्तः, कुम्भपर्यायोऽपि कपालावस्थाप्रापी मृत्स्वभावमपरित्यजन्, कपालादयोऽपि शकलशर्करापांशुत्रुटिपरमाणुरूपेणेति, परमाणवोऽपि रूपाद्यात्मना द्व्यणुकादिस्कन्धात्मना वेत्येवं द्रव्याणि सर्वदा सूक्ष्मस्थूलभेदोत्पादव्ययरूपेण परिणमन्ते, गुणानां च परिणामाभ्युपगमे गुणवत्त्वमर्थादेवाभ्युपेतं भवतीत्यनेकान्तवादसद्भावप्ररूपणार्थमिदमेवावोचद् भाष्यकारः, अथवा क्षणिकान् पदार्थान् ये प्रतिजानते त एवमाहुः—उत्पत्तिसमनन्तरमेव ध्वंसन्ते पदार्थाः, न हेतुमपेक्षन्ते ध्वंसमानाः, स्वात्मलाभक्षणानन्तरं क्षयः विनाशः क्षण उच्यते, निरुक्तविधानात्, तद्योगात् क्षणिकमिति। आह च—

> " क्षणोवाचेह नैरुक्तै-रुत्पन्नानन्तरं क्षयः।
> निर्हेतुः सोऽनपेक्षत्वात्, तद्योगात् क्षणिकं मतम् ॥ "

यथा पयःप्रतीपादयः प्रतिक्षणमन्ये चान्ये चोत्पद्यन्ते निरवशेषपूर्वनाशसमकालम्, एवमन्येऽपि महीधादय इत्यस्य प्रतिक्षेपायेदमाह—**तद्भावः परिणामः**। परिणामादन्यथात्वं

---

१ ' समत्वात् ' इति क-पाठः। २ ' द्रव्यं नमनं ' इति ग-पाठः। ३ ' त्वेन गुणाः ' इति क-पाठः। ४ ' क्षयः क्षण ' इति ग-पाठः। ५ ' रुत्पत्त्यनन्तरं' इति ग-पाठः।

दीपक्षीरादिषु न, स्वजात्यनुच्छेदात्, कश्चित् पर्यायोऽपैत्यपरः प्रादुरस्ति पुद्गलचैतन्यजात्यनुच्छेदेन तस्य, तस्य तथाभावः परिणामः, सोऽन्यत्वदुर्बुद्धेः कारणम्, उत्फणविफणकुण्डलप्रसारितानेकावस्थसर्पवदेकमन्वयि तत् परिणमते, न तु पूर्वोच्छेदेन सर्वथाऽन्यस्योत्पाद इति पूर्वोक्तेन विधिना प्रपञ्च्यम्, वृत्त्यक्षराण्यपि क्षणभङ्गनिरासद्वारेण समर्थनीयानीति । अथवा कैश्चित् परिणामलक्षणमुक्तम्—"अवस्थितस्य द्रव्यस्य धर्मान्तरनिवृत्तिर्धर्मान्तरप्रादुर्भावश्च परिणाम" इति, तदपाकरणायावाचि—**तद्भावः परिणामः**, तत्रावस्थितं यदि कूटस्थं विवक्षितम्, ततस्तस्य ये धर्मा उत्पादविनाशलक्षणास्तदाकारेण तन्नोत्पद्यतेऽस्थितत्वादेव, तादृगप्यस्तीति श्रद्धया प्रतिपत्तव्यम्, धर्मा एवोत्पद्यन्ते विनश्यन्ति वा व्यतिरेकिणः, अथानन्ये द्रव्याद् धर्मास्ततो धर्मोत्पादे धर्मविनाशे चानन्यत्वादेव द्रव्येणापि तथैव भवितव्यमिति नास्त्यवस्थितत्वम्, अतस्तद्भावलक्षण एव परिणामोऽभ्युपेयः, तदेव हि द्रव्यं तथा भवति, गुणो वा स्वभावः स्वतत्त्वं परिणामः परिणामिनो द्रव्यस्येति निरवद्यं परिणामलक्षणमिति ॥ ४१ ॥

**स द्विविध** इत्यादिना सम्बन्धं कथयति, स एष परिणामोऽनन्तरसूत्रोक्तो याथात्म्योपलब्धिनिमित्तत्वाद् द्वे विधे यस्यासौ द्विविधः । के पुनस्ते इत्याह—

## सूत्रम्—अनादिरादिमांश्च ॥ ५-४२ ॥

टी०—अविद्यमान आदिरस्यासावनादिः—अविद्यमानप्रथमारम्भः परिणामः, यस्मात् पूर्वं नास्ति परमस्त्यादिः स तद्वान् यः स आदिमान्—प्रथमारम्भप्रवृत्तिः, चशब्दः परिणामेयत्तोपसंहारार्थः समुच्चयार्थो वा । क्व पुनरयं परिणामोऽनादिः क्व चासावादिमानिति विभागेन निरूपयति—

**भा०—तत्रानादिररूपिषु धर्माधर्माकाशजीवेष्विति ॥ ४२ ॥**

टी०—**तत्रानादिरि**त्यादि । तत्र—तयोरनाद्यादिमतोः परिणामयोः, अनादिररूपिषु परिणामो धर्माधर्माकाशजीवेषु, क्रियापदाध्याहाराद् भवति । इतिशब्दोऽभ्युच्चयार्थः । कालद्रव्ये चानादिपरिणामः, तत्र धर्मद्रव्यपरिणामोऽनादिरसङ्ख्येयप्रदेशवत्त्वं लोकाकाशव्यापित्वममूर्तत्वं गन्तृगत्यपेक्षाकारणत्वेनागुरुलघुत्वमित्यादिः, अधर्मद्रव्यस्य तु स्थातृस्थित्यपेक्षाकारणत्वं विशेषः, शेषं समानम्, आत्मनोऽप्येते वाऽपेक्षाकारणरहिताः, अन्ये च जीवत्वभव्यत्वाभव्यत्वादयः परिणामाः, खस्यानन्तप्रदेशत्वममूर्तत्वमगुरुलघुपर्यायत्वमवगाहकात्वगाहदातृत्वमित्यादिः, कालस्य वर्तमानादिः परिणाम इत्येवममूर्तद्रव्येषु, रूपशब्दो मूर्तिवचनो मूर्तिश्च रूपरसगन्धस्पर्शा इति ॥ ४२ ॥

अथ रूपिषु मूर्तिषु परमाण्वादिषु किमनादिः परिणाम आहोस्विदादिमानित्यत आह—

---

१ 'न्यत्वबुद्धेः' इति ग-पाठः ।

## सूत्रम्—रूपिष्वादिमान् ॥ ५-४३ ॥

टी०—रूपाव्यभिचारिणः स्पर्शादय इति नोपात्ताः, स्पर्शश्च रूपाद्यव्यभिचारी क्वचित् किञ्चित् कदाचिदुद्भूतशक्तिर्भवति, क्वचिन्न्यग्भूतशक्तिः, लवणशकलादिवत्; अतः सर्वे वाय्वादयश्चतुर्गुणाः, स्पर्शवत्त्वात्, तत्रानेकः परिणामः पुद्गलेषु व्यणुकादिस्कन्धलक्षणः, शब्दादिः शुक्लपीतादिश्च, तत्र यदा द्वावणू विस्रसातो व्यणुकस्कन्धमारभेते, तदा व्यणुकस्कन्धपरिणाम आदिमान्, एवं शेषा अपि प्रयोगविस्रसाजनिता यथावद् द्रष्टव्या इति, एतदेव भाष्येण स्पष्टयति—

**भा०—रूपिषु तु द्रव्येषु आदिमान् परिणामोऽनेकविधः स्पर्शपरिणामादिरिति ॥ ४३ ॥**

टी०—रूपिष्वित्यादि। रूपमेषामेषु वाऽस्तीति रूपिणः, '(प्राणिस्थादातो) लजन्यतरस्याम्' (पा० अ० ५, पा० २, सू० ९६) ग्रहणं तत्र समुच्चयार्थं व्याख्यातम्, रूपिण्यप्सरा इति यथा। तेषु रूपिषु रूपस्पर्शरसगन्धवत्सु द्रव्येषु द्रुतिलक्षणेषूत्पादव्ययवत्स्वादिमान् परिणामोऽनेकप्रकारः, स्पर्शरसगन्धवर्णादिः। स्पर्शोऽष्टधा शीतादिः शीततरशीततमादिश्च, रसः पञ्चविधस्तिक्तादिस्तिक्ततरादिश्च, गन्धो द्विधा सुरभिरसुरभिः सुरभितरादिश्च, वर्णः शुक्लादिभेदात् पञ्चविधः शुक्लादिः शुक्लतरादिश्च, आदिशब्दाद् व्यणुकादिसङ्घातभेदलक्षणः शब्दादिश्चेत्येवमनेकाकारः परिणामः पुद्गलद्रव्यविषयः, जन्मादिविनाशान्तविशेषसंस्पृष्टः स्वरूपसामान्यविशेषधर्माधिकारी तद्भावलक्षणः परिणामः आदिमान् भवति, तुशब्दो विशेषणार्थः, द्रव्यत्वमूर्तत्वसत्त्वादयोऽनाद्या अपि पुद्गलद्रव्ये परिणामाः सन्तीत्यमुमर्थं विशिनष्टि, समुच्चयार्थो वा तुशब्दः आदिमांश्च, चशब्दादनादिश्च। एवं तर्ह्यरूपिष्वपि द्रव्येष्वादिमानपि परिणामोऽस्तु, अस्त्येव योगोपयोगलक्षणो जीवेषु वक्ष्यमाणः, धर्मादिष्वपि भवतु तद्वदेवेति, को वा निवारयति सन्तं पदार्थम्? यथा स्वयं गन्तुर्जिगमिषापरिणतस्याधुना धर्मद्रव्यमुपग्राहकं भवति, उपग्राहकत्वं च धर्मपर्यायः स च प्राङ् नासीत्, तस्य गन्तुर्गतिपरिणतेरभावात्, अधुना चोपजायमानः सादिरेव, देवदत्तगन्तृगत्युपरमेऽन्तवान्, एवं जन्मविनाशवत्त्वात् सादित्वम्, न चोपग्राहकत्वमुपग्राह्यमन्तरेणास्ति, एवमधर्मद्रव्यं स्थितिपरिणामभाजः स्थित्युपग्रहरूपेण परिणमते, व्योमाप्यवगाढुरवगाहदानपर्यायेण, कालश्च वृत्तवर्तमानादिपरिणत्या भवत्यादिमान्, एवमेष परिणामो द्रव्यार्थिकव्यापाराद् धर्मादिस्वभावी न धर्मादिव्यतिरिक्तः, क्वचिद् *वैस्रसिकः क्वचित् प्रायोगिकः क्वचिदुभयथोत्पादव्ययध्रौव्यलक्षणत्वात् सतः*, न चोपचारस्तत्त्वचिन्तायामङ्गभावं प्रतिपद्यते, इत्येवमनुमोदामहे तत्रादिमन्तं परिणामम्। ये तु मन्यन्ते रूपिष्वेवादिमान् परिणामो भवति, नामूर्तेषु धर्मादिषु, तेषामरूपिद्रव्यपर्यायाश्रयव्यवहा-

---

१ 'स्वाभानेकः' इति क-ख-पाठः। २ 'रमेण परिणतवानेवं' इति क-ख-पाठः।

रलोपादुत्पादादिलक्षणायोगात् परिणामाभावः, अपरिणामित्वाच्चानिर्धार्यमात्रस्वभावाः स्युर्धर्मादयः, स्वत उत्पादव्ययपरिणामशून्यत्वात्, तस्मात् सर्वत्र केचिदनाद्याः केचिदादिमन्तः परिणामा इति न्यायः, सूत्रकारेण तु भजनाप्रदर्शनार्थमेवं सूत्रन्यासः कृत इति ॥ ४३ ॥

यदुक्तमनन्तरमनाद्यादिमत्परिणामा रूपिष्वरूपिषु च धर्मादिषु सर्वत्र भवन्तीति तत्प्रदर्शनार्थममूर्तैकद्रव्यमुद्दिश्यादिमत्परिणामनिर्दिदिक्षया सूत्रं पपाठ—

## सूत्रम्—योगोपयोगौ जीवेषु ॥ ५-४४ ॥

**टी०**—अनन्तरसूत्रादादिमानित्येतदनुवर्तते, तच्च योगोपयोगयोर्विशेषणतया प्रयुज्यते, द्विवचनान्तमादिमन्ताविति, योजनं योगः–पुद्गलसम्बन्धादात्मनो वीर्यविशेषः, युज्यते वा स इति योगः, केन? आत्मना, शक्तिविशेषः प्राप्यत इतियावत्, कायवाङ्मनोरूपेणोत्पादः, उपयोजनमुपयोगः–चैतन्यस्वभावस्यात्मनो ज्ञानदर्शनाभ्यां स्वविषयोपलभ्यादिव्यापारः प्रणिधानादिलक्षणः, उपयुज्यतेऽनेन वेति समाधिविशेषस्तद्द्वारकोऽर्थपरिच्छेदोऽप्युपयोगस्तेनाकारेणात्मनो व्याप्तिः। कृतद्वन्द्वनिर्देशाद् **योगोपयोगौ जीवेषु**–आत्मस्वेकद्वित्रिचतुःपञ्चेन्द्रियेषूपपद्यमानोत्पत्तिकालावधित्वादादिमन्तौ, सिद्धेषु तु सकलयोगोच्छेदादुपयोग एव क्रमवृत्तिरादिमानेक इति। एनमेवार्थं भाष्येण स्फुटयति—

**भा०—जीवेष्वरूपिष्वपि सत्सु योगोपयोगौ परिणामावादिमन्तौ[१] भवतः॥**

**टी०**—**जीवेष्वरूपिष्वपि सत्सु** इत्यादि भाष्यम्। द्रव्यभावप्राणैः अजीविषुर्जीवन्ति जीविष्यन्ति चेति जीवाः। जीवेष्विति निमित्तार्था सप्तमी। जीवनिमित्तौ **योगपरिणामावादिमन्तौ भवतः**, तथापरिणामित्वादात्मनः, अथवा परिणाम्यपि कथञ्चिद् भेदविवक्षायां स्वपरिणामानामाधारतां प्रतिपद्यत एवेति, तेष्वात्मसु मूर्तिवियुतेष्वपि[२] भवत्सु। **अपि**शब्दोऽपेक्षायाम्। यथाऽयमपि विद्वान्, एवमण्वादिष्वादिमान् परिणामो जीवेष्वपीति समानम्, बहुव्रीहिणोक्तेऽपि मत्वर्थीयः क्वचिदभ्यनुज्ञातः, **पाणिनीये**ऽपि "इङ्धार्योः शत्रकृच्छ्रिणि" (अ० ३, पा० २, सू० १३०,) इति अरूपशब्दो वाऽतीत(जाति)वचनस्ततश्च सिध्यति च मत्वर्थीयः। '**कृष्णसर्पे त्ववल्मीके**' इति यथा, तत्रान्योन्यानुगतिलक्षणसम्बन्धादात्मनः कथं वाङ्मनोयोग्या पुद्गलानां च कायाद्यवष्टम्भोद्भूता शक्तिर्योगः।

**भा०—स च पञ्चदशभेदः।**

**टी०**—सामान्येन गमनादिकथनचिन्तनक्रियालक्षणः औदारिकवैक्रियाहारकमिश्रयोगाख्यः, तैजसकार्मणे त्वेकः, वाग्योगः सत्यमृषाऽसत्या (मृषा) उभयभेदाच्चतुर्धा, एवं मनोयोगोऽपि चतुर्धा, उपयोगः साकारानाकारलक्षणो जीवस्वभावः।

**भा०—स च द्वादशविधः।**

---

१ 'मन्तौ' इति क-पाठः। २ 'तेऽप्यात्मसु' इति जैनानन्दपुस्तकालयप्रतिपाठः। ३ 'ज्ञानु पाणिनिना यथा–इन्द्रा०' इति पाठान्तरम्।

टी०—मतिश्रुतावधिमनःपर्यायकेवलमतिश्रुतावध्यज्ञानत्रयभेदः पूर्वः ( प्राच्यः ), पाश्चात्यश्चक्षुरचक्षुरवधिकेवलभेदः। एतौ योगोपयोगौ परिणामावित्यनेनात्मनः सद्भावापत्तिं दर्शयति। आत्मा कायादिपुद्गलशतसम्बन्धात् तां तां गमनादिकथनचिन्तनक्रियां प्रतिपद्यते तद्रूपीभवति, क्षीरोदकवत् मृद्घटवच्च तादात्म्यं प्रतिपद्यत इतियावत्। स चोपजायमानकालावधिकत्वादादिमान्, सन्तत्या त्वनादिः, उपयोगोऽपीन्द्रियनिमित्तस्तन्निरपेक्षश्चात्मनो ज्ञस्वभावत्वाच्चैतन्यरूपत्वात् परिणामः सामान्यविशेषरूपः, सन्तत्याऽनादिः, प्रत्येकविवक्षायामादिमान्, अनयापि चोपयोगलक्षणमात्मनः सार्वकालिकत्वात्, योगोपयोगग्रहणाच्चान्येषामात्मन्यनादित्वं प्रायः परिणामानाम्। अथ मत्याद्युपयोगद्वादशकस्य किं स्वरूपमित्यारेकिते इदमाह—

भा०—तत्रोपयोगः पूर्वोक्तः ॥

टी०—तत्र-तयोर्योगोपयोगयोः उपयोगः पूर्वमेव द्वितीयेऽध्याये व्याख्यातः—स्वरूपेणोक्तः। "उपयोगो जीवलक्षणम्", "स द्विविधोऽष्टचतुर्भेदः" ( अ० २, सू० ८, ९ ) इत्यत्र। अथ योगः किंस्वरूप इत्याशङ्क्याह—

भा०—योगस्तु परस्ताद् वक्ष्यते ॥

टी०—परस्तादिति उपरिष्टात् षष्ठाध्यायादिसूत्रे "कायवाङ्मनःकर्म योग" इत्यत्राभिधास्यते यतः तस्मादत्र न व्याख्यायते। तुशब्दो हेत्वर्थः। तदेव च स्थानं योगस्वरूपव्यावर्णनस्य, उभयत्र व्याख्या गौरवमापादयति, तस्मात् तत्रैव व्याख्यास्याम इति, एवं सर्वद्रव्याणि परिणामवन्ति स्वरूपेण व्याख्यातानीति ॥ ४४ ॥

इति श्रीतत्त्वार्थाधिगमे अर्हत्प्रवचने भाष्यानुसारिण्यां तत्त्वार्थटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

# सूत्रक्रमेणान्तराधिकारसूची

## द्वितीयोऽध्यायः २

---

## चतुर्थोऽध्यायः ४

---

## पञ्चमोऽध्यायः ५

नमो नमः श्रीप्रभुधर्मसूरये ।

# शुद्धिपत्रकम् ।

( पाठान्तरादिसमेतम् )

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | १४ | Punnyāsa | Pannyāsa |
| ११ | १४ | Add now before Āgamoddhāraka | |
| १३ | १९ | मां प्रति | मह्यं |
| १४ | ५ | निर्धारिता | निर्धारिताः |
| १८ | १० | श्रीउमास्याति० | श्रीउमास्वाति० |
| २२ | १० | उत्तराध्ययनवृत्तौ | उत्तराध्ययनसूत्र |
| २२ | १२ | ०मन्त्रस्तथाषधैः | ०मन्त्रस्तथौषधैः |
| २२ | १८ | ०गमसत्र० | ०गमसूत्र० |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ९ | ०सूरिकृताटीका | ०सूरिकृता टीका |
| २ | २ | स्वच्छतामन्यां | स्वच्छतामनन्यां |
| ,, | ४ | ०गमिकम० | ०गमिकामा० |
| ,, | ५ | शुद्धमध्ययनादिकाले | शुद्धमध्ययनादि काले |
| ,, | १० | कर्तृकरणे कृता | कर्तृकरणे कृते सति कर्तृक-रणे कृता |
| ,, | १२ | च चारित्राद् | चरित्राद् |
| ,, | १४ | इति कृत्वा ज्ञानशुद्धः— | इतिकृत्वा ज्ञानशुद्धं |
| ,, | १८ | ज्ञानमन्यथा | ज्ञानं भवत्यन्यथा |
| ,, | २२ | पञ्चतया | पञ्चतयी |
| ,, | २९ | एकतमवत् | एकतमत् |
| ,, | ३० | तच्च सप्रयोजनं | तच्च समासप्रयोजनं |
| ३ | ६ | चास्य | वाऽस्य |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ११ | चास्य | वाऽस्य |
| ,, | २१ | ०भोगकर्मा० | ०भोग्यकर्मा० |
| ४ | १२ | जन्मानि | जन्म जन्मनि |
| ,, | १७ | एवोत्तरोपपत्ति० | एवोत्तरोत्तरोपपत्ति० |
| ५ | ४ | ०प्यष्ट० | ०प्यभीष्ट० |
| ,, | १४ | वा | वा, |
| ,, | १५ | ०मेव | ०मेव, |
| ६ | ८ | स्वामी विकल्पमाह | स्वामिविकल्पमाह |
| ,, | ३ | चामुत्र, | चामु--त्र |
| ,, | २६ | पूर्वेभ्यो न्यूनेषु | पूर्वेभ्योऽन्यूनेषु |
| ७ | १६ | कन्दफला० | कन्दमूलफला० |
| ८ | २६ | पूजामर्हन्ते० | पूजा--मर्हन्ते० |
| ९ | १७ | ० म्यर्च्या | ०म्यर्च्य |
| ११ | ६ | ०मार्गाप्रदर्शनात् | ०मार्गप्रदर्शनात् |
| ,, | १३ | श्रुताविधिभिः | श्रुतावधिभिः |
| ,, | २१ | उक्तसलिल० | उक्तं सलिल० |
| १२ | १९ | ०मभिध्याय अभि० | ०मभिध्यायन्नभिं० |
| १३ | १६ | सिद्धेभ्यः | सिद्धेभ्यः, |
| ,, | १७ | प्रयुक्तं | प्रत्युक्तं |
| ,, | २२ | सूत्रीनिर्देशाद् | सूत्रनिर्देशाद् |
| १४ | २ | षड्विधमपि | ० |
| ,, | २७ | ०षमित० | ०पामित० |
| १५ | ११ | ०भवनीयः इदं | ०भवनीयमिदं |
| ,, | २० | सम्बध्यते | सम्बध्यते, |
| ,, | २१ | गतमभि० | गतमपि |
| ,, | २६ | विशेषितमिति० | विशेषितमेवेति |
| १६ | १ | प्रवचने, इत्येतद् | प्रवचने--" इत्येतद् |
| ,, | २ | चेति | च " इति |
| ,, | ७ | वचोरूपं | वचो रूपं |
| ,, | १५ | प्रत्यासं--- | प्रत्यासं, |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | १५ | कर्तुम् | कर्तुम् ? |
| ,, | २९ | ०दुश्चिप्सेच्च | ०दुश्चिक्षिप्सेच्च |
| १७ | २० | ०वृद्धिसंभवोऽवसीयते | ०वृद्धिःसंभाव्यमानाऽवसीयते |
| ,, | २१ | श्रूयन्ते | श्रूयते |
| १९ | १७ | उपेन्द्रवज्रा | वंशस्थविलम् |
| २१ | २३ | तत्प्रसङ्गप्रतिषेधो | तत्प्रसङ्ग इति प्रतिषेधो |
| २२ | ६ | ०मादि० | ०माधमादि |
| ,, | ८ | ०शुद्धेः | ०शुद्धे |
| ,, | ९ | प्रवचने शुद्धि० | प्रवचनशुद्धि० |
| ,, | २८ | तीर्थकृत्त्वस्वाभा० | तीर्थकृत्तत्स्वाभा० |
| २४ | १० | उ० प | उ० ५ |
| ३१ | ६ | इन्द्रस्याजीवस्य | इन्द्रस्य जीवस्य |
| ३३ | १ | लक्षति | लक्षयति |
| ,, | ४ | निश्चितपरिज्ञानं | निश्चितं परिज्ञानं |
| ,, | ७ | विशेष्यकल्पना | विशेषणविशेष्यकल्पना |
| ३४ | १ | ०प्रतिभागेन | ०प्रविभागेन |
| ,, | ४ | आत्मतातत्त्वं | आत्मना तत्त्वं |
| ,, | ७ | चानुभवति | चानुभवन्ति |
| ३६ | १४ | फणपरिणामेन | फणापरिणामेन |
| ३८ | १० | गतिशरीरा० | गतिजातिशरीरा० |
| ४२ | २७ | ०पार्ष्ण्यादय | ०पार्णादय० |
| ४५ | १ | जीवाकारः प्रतिकृतिसद्भावे | जीवाकारा प्रतिकृतिः सद्भावे |
| ,, | ३१ | खला | खलु |
| ४६ | ६ | दुहितृकादिसूत्र- | दुहितृकादि सूत्र- |
| ४८ | ३ | सम्भवन्ति | सम्भवति |
| ५५ | १७ | पुद्गलादिरूपस्वप्रदेश० | पुद्गलादिरूपः स्वप्रदेश० |
| ५६ | २४ | विवक्षैव | तस्या विवक्षैव |
| ६२ | १३ | उपरिशाट० | परिशाट० |
| ६३ | ,, | ०विषाणादिकः | ०विषाणादिके |
| ६५ | १ | सम्यग्दशर्नम् | सम्यग्दर्शनम् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६६ | २ | अष्टौ चतुर्दशभागा देशोनाः | ० |
| ७० | ,, | तत् श्रुत० | तत् सर्वं श्रुत० |
| ,, | ८ | प्रति विशिष्ट० | प्रतिविशिष्ट० |
| ७२ | २१ | स्पष्टो मतेः | स्पष्टो भवति मतेः |
| ७४ | ६ | निषेधात् | निषिद्धात् |
| ,, | ३४ | निश्चयतः | निश्चयता |
| ,, | १४ | प्रत्यक्षं, प्रत्यक्षं चाद्ये | प्रत्यक्षं चाद्ये |
| ,, | १९ | ब्रते | ब्रूते |
| ७६ | १२ | इन्द्रियनिमित्तत्वात् | इन्द्रियानिन्द्रियनिमित्तत्वात् |
| ,, | २४–२५ | देशा–दिति | देश इति |
| ८८ | २६ | भवासाधन० | भावसाधन० |
| ८९ | २६–२७ | ०भिधाया–भिधानं | ०भिधाय विधानं |
| ९१ | ७ | ख्यायन्ते | ख्याप्यन्ते |
| ,, | ८ | सर्वकृतान्ताः | सर्वतीर्थकृतान्ताः |
| ,, | २४ | कर्करस्पर्श | कर्कशस्पर्श |
| ९५ | ५ | भदप्रयोजनं | भेदप्रयोजनं |
| ,, | ८ | व्यवहि विप्र० | व्यवहितविप्र० |
| ९९ | १८ | ततोऽरत्निमात्रे | ततो रत्निमात्रे |
| १०२ | २३ | प्रतिपतत्या | प्रतिपतति आ |
| १०६ | १७ | मनः–अनिन्द्रियं प्रतिविशिष्ट० | मनोऽनिन्द्रियप्रविष्ट० |
| ११० | २१ | कस्मिन् | एकस्मिन् |
| ११५ | १० | सङ्ग्रहः | सङ्ग्रहस्तस्मात् सर्वम् |
| ,, | ११ | भवना० | भावना० |
| ११६ | ५ | घटादितैव | घटादिनैव |
| ,, | २२ | ०र्थप्र० | ०र्थनया अर्थप्र० |
| १२० | ९ | नित्यतो | इत्यतो |
| १२४ | २९ | ०कुमारसिद्धिः | ०कुमारप्रसिद्धिः |
| १२६ | ११ | मतिज्ञानी मनुष्य० | मतिज्ञानी मनुष्यजीवस्य मनुष्य० |
| ,, | १४ | दृष्ट्या | दृष्ट्वा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२६ | १९ | ज्ञानादीनां | ज्ञानानां |
| ,, | २६ | प्रमाणार्थवत् तन्त्रा | प्रमाणज्ञेयवत् तन्त्रा— |
| १२७ | ५ | प्रकान्तनय० | प्रकान्तं नय० |
| ,, | ,, | चादर्शितं | च दर्शितं |
| १२८ | ३ | स—समु० | स समु० |
| ,, | ९ | ०मानत्वाद् | ०मानत्वात्, |
| ,, | १७ | षणोपेतं, | षणोपेतं |
| ,, | १८ | एवम्भूत इव | एवम्भूत एव |
| १२८ | १९ | नान्यदिति | नान्यदेति |
| ,, | २० | ०तावितिचेत् | ०ताविति चेत् |
| १२९ | ३० | गम्येते | गण्येते |
| १३१ | ९ | जीवा जीवा | जीवौ जीवा |
| ,, | १० | आद्यार्थः | आद्यार्थे |
| १३३ | ४ | विपर्ययान | विपर्ययान् |
| १३४ | २० | कश्चित् प्राणी | ० |
| ,, | २८ | अथैवमेव लौकिका० | अथैवमेव किं लौकिका० |
| १३७ | २४ | रोदति | रोदिति |
| ,, | ३० | किंसतत्त्वः | किंसत्त्वः |
| १३८ | १२ | ०नुदयलक्षणः | ०नुदयक्षयलक्षणः |
| १४० | १९ | मध्य-- | मध्यगा-- |
| १४२ | २२ | नियम्य | नियम्यं |
| १४३ | ५ | ०भेदात् मुक्त० | ०भेदोन्मुक्त० |
| १४५ | ५ | प्रतिपदविवरणे | प्रतिपदं विवरणे |
| १४८ | १९ | ०निवृत्तौ | ०निर्वृत्तौ |
| १४९ | २९ | युञ्जनं योगः | युजेर्योजनं योगः |
| १५० | २८ | ०र्हतानुमीयते | ०र्हताऽनुमीयते |
| १५१ | ५ | ०लब्धार्थविषय० | ०लब्धार्थे विषय० |
| १५१ | १४ | ०संशयासर्वार्थ० | ०संशयसर्वार्थ० |
| १५२ | २१ | ०नाकार | ०नाकार-- |
| १५४ | २२ | विलक्षवचन० | विलक्षयवचन० |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५८ | १३ | उच्यते | उच्यन्ते |
| १५९ | १२ | ०घोऽधः पाताल० | ०घोऽधः पाताल० |
| १६० | ५ | छेद्यत्वादिदृष्ट० | ०छेद्यत्वादि दृष्ट० |
| ,, | १४ | ०शेषस्तथैव | ०शेषस्तथैव, |
| ,, | १९ | ०समतासमाहारा० | ०समता समाहारा० |
| ,, | २१ | ०मनित्थं रथं | ०मनित्थंस्थं |
| ,, | २५ | तेजो० | तेजों वायू |
| ,, | ३१ | अमनोज्ञतरामेव | अमनोमतरामेव |
| ,, | ३२ | -पाठः ॥ | पाठः । |
| १६१ | १२ | देशान्तरा | देशान्तर– |
| ,, | १३ | ०लक्षणेति, | ०लक्षणेति |
| ,, | १९ | वा | वा, |
| १६२ | २३ | ०तयाङ्गीकृता | ०तयाऽङ्गीकृता |
| ,, | ३२ | ०भूते तिप्राणा | ०भूते प्राणा० |
| ,, | २ | ०भावैरतः | ०भावैः, अतः |
| १६३ | २ | व | वा |
| ,, | १५ | स्तवनादीनामपि | सूचनादीनामपि |
| ,, | १९ | जुष्टानि | जुष्टानि– |
| ,, | २८ | 'सूचनादीनां' इति ग-पाठः | 'स्तवनादीनामपि' इति क-ख-पाठः |
| १६४ | २ | द्विः पञ्चकाभिधानात् | द्विपञ्चकाभिधानात्, |
| ,, | ८ | ०दोषोऽतः | दोषः, अतः |
| ,, | ११ | ०तया | ०तया, |
| ,, | १२ | भवन्ति | भवन्ति, |
| ,, | २१ | ०र्धार्यते, स्वरूपभेदाभ्यां | ०र्धार्यते स्वरूपभेदाभ्यां, |
| ,, | २२ | ०करणं | ०करणं, |
| ,, | २७ | निर्माणनामकर्मा० | निर्माणनाम नामकर्मा० |
| १६५ | ३ | द्वाराण्यव० | द्वाराणि, अव० |
| ,, | १७ | ०विधाकाराः | ०विधाकारा |
| ,, | २० | विशेष अङ्गोपाङ्गनामनिर्माण० | विशेषः अङ्गोपाङ्गनाम निर्माण० |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६५ | २१ | संस्कृता | संस्कृता— |
| ,, | २५ | अङ्गोपाङ्गे | अङ्गोपाङ्गं |
| १६६ | २ | ०निरपेक्षा | ०निरपेक्षा, |
| ,, | ८ | ०यान्तरं निर्वृत्तौ सत्यपि | ०यान्तरं, निर्वृत्तौ सत्यपि |
| ,, | ९ | ०णाति तस्मान्निर्वृत्तेः | ०णाति, तस्मान्निर्वृत्ते |
| ,, | ११ | ०मपि | ०मपि, |
| ,, | १२ | कथयति | कथयति, |
| ,, | १३ | यदनुपहत्यात | यदनुपहत्या |
| ,, | २९ | तस्यायमर्थः | तस्यायमर्थः— |
| १६७ | १२ | कथं कृत्वोक्तं | कथंकृत्वोक्तं |
| ,, | १७ | जनितात्मनो | जनिताऽऽत्मनो |
| ,, | २७ | खुल | खलु |
| १६८ | ७ | ०श्रुल्य० | ०श्रल्य० |
| ,, | ८ | उपयोगपरि० | उपयोगः परि० |
| ,, | १२ | प्रसङ्गोत्यन्तास- | प्रसङ्गः ? अत्यन्तास- |
| ,, | १३ | ०द्वारेण— | ०द्वारेण |
| ,, | १६ | संवेदनानुभवनलक्षणा | संवेदनाऽनुभवनलक्षणा, |
| ,, | २४ | निवृत्त्यादीनां | निर्वृत्त्यादीनां |
| ,, | २६ | दर्शयति— | दर्शयति, |
| ,, | २७ | निर्वर्तन्ते | निर्वर्त्यन्ते |
| ,, | २९ | न च | नैव |
| ,, | ३० | ०च्यते | ०च्यते— |
| १७१ | ३१ | श्रतज्ञानं | श्रुतज्ञानं |
| ,, | ३२ | ०विधविशे— | विधविशेषणाद् भावश्रुत-विशे- |
| १७२ | ६ | वा | भावश्रुतपूर्वकत्वाद् वा |
| ,, | १४ | एतद्विहिताविहितानुभय० | एताद्वि हिताहितानुभय० |
| ,, | २२ | समस्तत | समस्त्यत |
| १७३ | ८ | निचायि | निरचायि |
| १७४ | १८ | भाषितेनापि | भाष्यं ततोऽपि |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७० | ३ | ध्वनिः, | ध्वनिः |
| १७७ | १३ | हरामीति मोहनीयोदयात्, | हरामीति, मोहनीयोदयात् |
| ,, | २२ | चाग्नेर्लक्षण० | चाग्नेर्न लक्षण० |
| १७७ | २६ | मतिस्मृतिसंज्ञाचिन्ताभिनि० | मतिः स्मृतिः संज्ञा चिन्ता ऽभिनि० |
| १७८ | ९ | ०रभावाद् | ०रभावाद्, |
| ,, | १३ | ०न्यस्यानु | ०न्यस्यां तु |
| ,, | १६ | कर्मयोगः | कर्मयोगः, |
| १७९ | ८ | ०रब्धो | ०रब्धौ |
| ,, | १९ | विग्रहगतेः | विग्रहगतौ |
| ,, | २० | कार्मणमस्ति | कार्मणमिश्रः |
| १८० | ९ | व्यक्ति० | व्यक्त० |
| ,, | १५ | इत्याह— | इत्याह । |
| १८१ | २६ | योगैर्जीवाः | योगे जीवाः |
| १८३ | ४ | ०क्काइए | ०काइए |
| ,, | ७ | ०क्काइयत्ताए | ०काइयत्ताए |
| ,, | १४ | तेणट्टेणं | तेणट्ठेणं |
| १८४ | ४ | द्विसामायिक० | द्विसामयिक० |
| ,, | ८ | ०क्काइए | ०काइए |
| १८४ | १० | ०क्काइयत्ताए | ०काइयत्ताए |
| ,, | १० | सेणं | से णं |
| ,, | २६ | त्रिसमया वा | त्रिसमया वा, |
| ,, | २८ | नास्तीति | नास्तीति, |
| १९१ | ४ | ०मित्यादि | ०मित्यादि भाष्यम् |
| ,, | ८ | प्रतिक्रष्टः | प्रतिक्रुष्टः |
| १९३ | १८ | न तु च | ननु च |
| ,, | १९ | ० दुर्लभः | ०दुर्लभः, |
| ,, | २१ | पोतजाः | पोतजाः— |
| ,, | २३ | ०धीयते— | ०धीयते |
| १९४ | ५ | दधते | दधते— |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९४ | ६ | नारकेष्विति | नारकेष्विति, |
| ,, | २१ | ०धारणमवच्छेदो | ०धारणम्—अवच्छेदो |
| ,, | २६ | ०द्वान्तर० | ०द्वाऽन्तर० |
| १९५ | ४ | स्यात् | स्यात, |
| ,, | १२ | ०रूपतानेक० | ०रूपताऽनेक० |
| ,, | २४ | स्याद्, | स्याद्? |
| १९६ | १ | कर्मणस्तु | कार्मणस्तु |
| ,, | १ | च, यथापूर्वं | च, यथा—पूर्वं |
| ,, | ९ | ०मेकपरमाणु० | ०मे(कै)कपरमाणु० |
| ,, | ११ | समुल्लङ्घ्या | समुल्लङ्घ्य |
| ,, | २६ | तेषां | **तेषां** |
| १९७ | ५ | ०मर्थः | ०मर्थः— |
| ,, | १४ | तथा | तथाऽऽ— |
| ,, | १९ | ०दृश्यत्वात् | ०दृश्यत्वात्, |
| ,, | २५ | ०विशेषात् | ०विशेषात्, |
| १९८ | ५ | दृश्यन्ते | दृश्यते |
| ,, | ७ | प्रदेशस्कन्धः | प्रदेशः स्कन्धः |
| ,, | २८ | प्रदशमानम् | प्रदेशमानम् |
| ,, | ३२ | ०दर्शयति— | ०दर्शयति, |
| १९९ | ७ | चार्थे | चार्षे |
| ,, | ८ | मनोग्रहयोग्यकार्मणस्य | मनोग्रहणयोग्यः कार्मणस्य |
| ,, | २१ | ०द्रव्याभावात् | ०द्रव्यद्वयाभावात् |
| २०० | १८ | ताम्या० | **ताभ्या०** |
| ,, | १९ | ०मनादि० | **०मनादि०** |
| २०१ | ४ | ०कर्माधाय चेतसि, अवोचत् सूरिः | ०कमाधाय चेतसि, अवोचत् सूरिः— |
| ,, | ६ | ०**भवतः** । सर्वस्यामवस्थायां | **भवतः** सर्वस्यामवस्थायां, |
| ,, | २२ | ०प्रवणमानसं | प्रवणमानसः |
| २०३ | २९ | विकल्पो हेया तु | विकल्पो भवस्थताया हेयो नु हेयरूपतया तु |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०६ | २४ | तत्पूर्विकैवा० | तत्पूर्विके चा० |
| २०७ | १२ | जन्मनि | ० |
| २०८ | ,, | चतुर्दशपूर्वधर एव | चतुर्दशपूर्वधरस्यैव |
| २०८ | १९ | परिभूतपाप्मा | परिपूतमाप्मा |
| २१२ | ११ | ०ग्राह्यादयो | ग्राह्यतादयो |
| २१३ | २३ | अपर्यादाय | पर्यादाय |
| २१४ | ३० | स्पृष्टानि, पुरुषो भदन्त ! | स्पृष्टानि, अथ भदन्त ! तेषां शरीराणामन्तरा किमेकजीवस्पृष्टा अनेकजीवस्पृष्टाः ? गौतम ! एकजीवस्पृष्टा, नानेकजीव स्पृष्टाः। पुरुषो भदन्त ! |
| २१५ | १४ | मनुष्यसंयुतः | मनुष्यसंयतः |
| २२३ | ३ | **देवकु–** | **सदेवकु–** |
| २२३ | ५ | सत्ता० | सततसत्ता० |
| २२४ | १५ | यस्य | तस्य |
| २२६ | ३ | नाम | समुद्घातो नाम |
| ,, | २९ | ०वर्तनः | ०वर्तनैः |
| २३१ | ५ | गाहवतां | गाहवतां न पुनः |
| २३२ | ३ | सू०, ५४ | सू० ५४ |
| ,, | ५ | शर्कराद्याः | शर्कराप्रभाद्याः |
| २३२ | १७ | ०भासुरा | ०भास्वरा |
| ,, | २५ | पूर्वायां | पूर्वस्यां |
| २३३ | १९ | वसुधावर्तिनो | वसुधाऽधोवर्तिनो |
| २३४ | १७ | परितनाऽ– | परितनोऽ– |
| २३७ | १५ | **क्रमेणाधो०** | **क्रमेणाधोऽधो** |
| २३८ | ३ | स्पष्टयति—लोचन० | स्पष्टयति—न कदाचिदक्षिनिमेषमात्रमपि न भवन्ति अर्थात् लोचन० |
| २४१ | १९ | ० | परस्परोदीरितानीति भाष्यम्। |
| २४६ | २६ | त्रैविध्यं | त्रैविध्यम् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४६ | ३० | तदेतार्थेन | तदेतेनार्थेन |
| २४७ | २२ | षड्विध | षड्विधं |
| २४८ | ११ | त्रितये | तृतीयो |
| ,, | २९ | वालाग्रभूता | वालाग्रभृता |
| २५१ | २८ | च | ० |
| २५२ | १६ | चैतावत्या चा (सत्यावा) | चैतावती सत्या वा |
| २६२ | १४ | ०रात्तममष्टौ | ०रात्तनमष्टौ |
| ,, | २४ | आरात्तम० | आरात्तन० |
| २६३ | १६ | समुद्रेषूत्पत्स्यते | समुद्रेषूत्पद्यते |
| २६४ | २२ | ०विशेत् | ०विशेत |
| ,, | ३१ | केन | ० |
| २६९ | ७ | नरायुषोमानम् | नरायुषो मानम् |
| २७२ | ६ | ५८४ | ४२१ |
| २७३ | ९ | ०क्रीडागद्युतितिस्वभावाः | ०क्रीडागतिद्युतिस्वभावा |
| ,, | १२ | विभिन्नः | विभिन्नं |
| ,, | २७ | अक्षरानिपातैः | अप्सरोनिपातैः |
| ,, | २९-३० | षण्मासं व्यतिवर्तेत कियदेकं विमानं व्यतिवर्तेत कियदेकं न व्यतिवर्तेत | षण्मासान् व्यतिव्रजेत् अस्त्ये-ककं यं विमानं व्यतिव्रजेत् अस्त्येककं यं न व्यतिव्रजेत् |
| २७४ | २ | दारुच्छेदप्रज्ञा० | दारुच्छेदे प्रज्ञा० |
| ,, | १९ | प्रतीयताम् | प्रतीयन्ताम् |
| ,, | ३१ | भेद- | भेदा |
| २७५ | १ | अन्ते | अन्तं |
| ,, | ३ | द्विविकल्पाः— | द्विविकल्पाः— |
| ,, | ११ | अनुधा | अधुना |
| ,, | २३ | एकैक० | एक० |
| ,, | २८ | प्रत्यासन्नै( त्ते ! )श्चेति | प्रत्यासन्नश्चेति |
| २७७ | २६ | कार्य— | कार्ष— |
| २७९ | २२ | पञ्चविंशति० | पञ्चत्रिंशत्० |
| २८० | १ | ०ह्रसाद्रि-- | ०ह्रसाद्रि-- |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८० | १८ | राहितम् | रहितत्वाच्च |
| २८१ | १७ | तत्कुमार० | तस्य कुमार० |
| २८२ | २३ | रन्तप्रभायां | रत्नप्रभायाः |
| ,, | २५ | रन्तप्रभायां | रत्नप्रभायां |
| २८५ | २७ | दशोत्तरयोजनशतबहुल | दशोत्तरं योजनशतं बहल |
| २८९ | २१ | त्रिपञ्चाशत् ० | पञ्चाशत्० ( पाठान्तरम् ) |
| २९० | २ | सङ्ग्रहव्यव० | सङ्ग्रहाभिधानं व्यव० |
| ,, | १० | ततः | अतः |
| ,, | ३० | पद्यते | पद्यन्ते |
| २९१ | ६ | एष च | एष वा |
| २९२ | २३ | ०विशिष्टोच्छ्वासपरि० | विशिष्टोच्छ्वासनिःश्वासपरि० |
| २९३ | १३ | मानेन | मासेन |
| ,, | २० | चतुरशी तिगुणिताः | चतुरशीतिगुणिताः |
| २९४ | २१ | एतान्येव | तान्येव |
| २९५ | १४ | नाद्यन्तं | नाद्यनन्तं |
| २९७ | २ | तेऽतः | ते च |
| ,, | ४ | तत्रस्थं | तत्र स्थापित इति |
| २९८ | ३ | **सौधर्मादिष्वि**त्यादि | **सौधर्मादिषु कल्पविमानेषु वैमानिका देवा भवन्ती**त्यादि |
| ,, | ७ | सर्वरत्नमयो | सर्वरत्नप्रायो |
| ,, | ११ | माहेन्द्र समु० | माहेन्द्रः समु० |
| ,, | १६ | लघीयस्त्वावस्थिते० | लघीयस्त्वात् स्थिते० |
| ३०० | १६ | भवत्युपरीति | भवत्युपर्युपरीति |
| ३०१ | २६ | न्यूनतरा | न्यूना न्यूनतरा |
| ३०५ | १७ | कनकवच्छ्रुचयः | कनकवच्छवयः |
| ३०७ | १ | रणाग्नि० | रणाद्यग्नि० |
| ३०८ | ५ | ०मनुगच्छान्ति | ०मधिगच्छान्ति |
| ३०९ | ७ | ०प्रभूतीनां | ०प्रभृतीनां |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३०९ | १६ | भवनासिनां | भवनवासिनां |
| ३१२ | २५ | योजनीया | योजनीयं |
| ३१५ | १७ | ०मूलल क्षण० | ०मूललक्षण० |
| ३१६ | ३ | प्रसक्त- | प्रसक्ते- |
| ३१७ | ६ | लाकारमास्कन्दलु)दु?) | लाद्याकारमास्कन्दलु (दु?) |
| ,, | १३ | संसर्गादीनि | संसर्गादीनि हि |
| ३२० | ४ | ०भूतात्प्ररूप० | ०भूतात्मरूप० |
| ३२१ | १६ | सम्भवतो | सम्भवन्तो |
| ,, | २४ | ०पत्तिन | ०पत्तिर्न |
| ३२२ | ६ | ०नाऽऽश्रियते | ०नाऽनुश्रियते |
| ,, | ११ | एतानि–अन्तराविष्कृतानि | एतानीति अन्तराधिष्कृतानि |
| ३२५ | ६ | ० | पुद्गला एव रूपिणो भवन्तीत्यादि |
| ३२६ | २ | आकाशादेक० | आऽऽकाशादेक० |
| ३२८ | १ | धर्मादयः | धर्मादयः पुनः |
| ३२९ | १३ | ति | इति |
| ,, | २२ | ०प्रदेशे प्रस्ताव० | ०प्रदेशप्रस्ताव० |
| ३३० | ६ | प्रदेशाश्वर्मादिवत् | प्रदेशा धर्मादिवत् |
| ३३२ | १८ | ०पेक्ष्य | ०पेक्ष्यं |
| ३३६ | १२ | औदारिक० | औदारिकादि० |
| ,, | १६-१७ | देहे त्रैभागः | देह-त्रिभागः |
| ,, | २२ | पद्मनाल० | पद्मादिनाल० |
| ३३७ | १२ | भ्रमो | भ्रमो |
| ३३८ | २१ | ०लक्षणस्य | लक्षणस्याव्याप्तता |
| ३३९ | १२ | अनन्तरो० | अथानन्तरो० |
| ३४० | ६ | ख– | स्व– |
| ३४० | २५ | मन्तातरं | मतान्तरं |
| ३४१ | १ | ज्ञानाधि( नवि ? )कारेण | ज्ञानाकारेण |
| ,, | ३ | मूर्तादि० | मूर्त्यादि० |
| ,, | १७ | **पञ्चविधानी**त्यादि भाष्यम् | **पञ्चविधानि शरीराण्यौदारिकादीनि**ति भाष्यम् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३४२ | ११ | ० | **तत्र शरीराणी**त्यादि भा० |
| ,, | २० | निसृजति | निसृजन्ति |
| ३४६ | १७ | ०पुद्गलजीव० | ०पुद्गला जीव० |
| ३४७ | ८ | ०रुपग्रह– | ०रूपगृह्य– |
| ,, | १४ | लक्षणशब्दोपरि टिप्पणम्—बहिरन्तर्भेदाविवक्षया सामान्येन। | |
| ३४८ | १० | पानन्त्यभूत० | पानन्यभूत० |
| ,, | २६ | परिणामकारणं | परिणामिकारणं |
| ३४९ | १९ | ०मितेन | ०मितेर्न |
| ३५१ | ७ | शिरीष० | शिरीषां |
| ,, | ८ | ०राच्छुरन्तः | ०राच्छुरीतः |
| ,, | २१ | ०पाटलप्रसवाः | पाटलाप्रसवाः |
| ३५२ | २८ | प्रतिवाद्य० | प्रतिपाद्य० |
| ३५४ | २० | **चारणां** | **चाराणां** |
| ३५५ | १४ | ०भाजस्त इति | ०भाज इति |
| ३५७ | २८ | भोगार्थान्तर० | भागोऽर्थान्तर० |
| ३५८ | १२ | ०लाभत्वात् | ०लाभात् |
| ३५९ | ११ | शब्दरूपा० | शब्दपरिणामरूपा० |
| ,, | १४ | ०स्थितैरपि | स्थैरपि |
| ,, | २६ | फले वृन्त० | फलवृन्त० |
| ,, | २९ | स्यादध्रवत्वादिति | स्यादध्रुवत्वादिति |
| ३६० | १४ | वस्रसिको | वैस्रसिको |
| ,, | २७ | विवक्षितम् | न विवाक्षितम् |
| ३६३ | ४ | ०भूर्यपत्रादिषु | ०भूर्जपत्रादिषु |
| ,, | ४ | अनुतट० | अनुचट० |
| ३६४ | २० | तद्वन्त् | तद्वन्त |
| ३६५ | २१ | कारणकार्ययोर्नाशो० | कारणात् कार्यनाशो० |
| ३६६ | २५ | सूत्रेऽत्र | सूत्रेण |
| ३६७ | २३ | अणुस्तिष्ठत्य० | अणुस्तिष्ठन्त्य० |
| ,, | २३ | ०हति- | ०हनि- |
| ३६९ | ११ | बहुलोकसिद्धं | बहुलोकप्रसिद्धं |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६९ | १८ | कन्दली० | कदली |
| ,, | २२ | पर्यायन- | पर्यायत- |
| ३७० | २५ | ०गित्यण्। सौदामिनीति विद्युदेक० | ०गित्यण् सौदामिनीति विद्युत्, एक० |
| ३७१ | ४ | कारणत्रविध्याविशेषे सति ॥ | कारणत्रैविध्याविशेषे सति— |
| ३७२ | ६ | ० | **भेदसङ्घाताभ्यामि**त्यादि भाष्यम् |
| ,, | ८ | दश्या | दशा |
| ,, | २१ | ०विरोधिद्वयं | ०विरोधि द्वयं |
| ३७३ | ९ | परिणामश्च | परिणामं च |
| ,, | ९ | परितः | परिणतः |
| ,, | १४ | द्रव्याणां यथा० | द्रव्याणां च यथा० |
| ,, | २० | ग्राह्य | ग्राह्यं |
| ,, | २५ | माभिप्रायः, | ०मभिप्रायः— |
| ,, | २९ | प्रतिजानीते, | प्रतिजानीते |
| ३७४ | १५ | ०वस्थाप्रध्वंसो | ०वस्था प्रध्वंसो |
| ,, | १७ | घटसंस्थानादि० | पटसंस्थानादि० |
| ,, | २२ | मात्रत्वाद्, वा | मात्रत्वाद् वा, |
| ,, | २३ | ०पत्यवत्वे | ०पत्यवत्त्वे |
| ,, | २४ | निवार्यते, | निवार्यते ? |
| ,, | २६ | ०लभ्यन्ते प्रत्यक्षादिना | ०लभ्यन्ते—प्रत्यक्षादिना |
| ,, | २८ | ०भयाग्राहि० | ०भयग्राहि |
| ३७६ | ७ | गवादि– | गवाश्वादि– |
| ३७४ | २९ | पूर्वःपूर्वो विधिः परःपरो० | पूर्वः पूर्वो विधिः परः परो० |
| ३७५ | ९ | स्थितमिदं | स्थितमिदम्— |
| ,, | १७ | ०स्वभावाऽन्य० | ०स्वभावोऽन्य० |
| ३७७ | १४ | यत्त | यत् तु |
| ,, | १८ | सहते | प्रसहते |
| ३७८ | १२ | ०ष्ठान्यान्यार्थ० | ष्ठोऽन्योऽन्यार्थ० |
| ,, | १४ | ०स्थास्यते | ०स्थाप्यते |

